पातालीयश्च [इति] । स्वर्ग्यपातालीययोर्भौमः प्रधानः । स हि महाविषयः । स च चतुर्द्धा जातिद्रव्यगुणक्रियारूपार्थतया । तेऽपि प्रत्येकं त्रिधा असतो निबन्धनात्, सतोप्यनिबन्धनात्, नियमतश्च ।

तत्र सामान्यस्यासतो निबन्धनं यथा—नदीषु पद्मोत्पलादीनि । जलाशयमात्रेऽपि हंसादयः । यत्र तत्र पर्वतेषु सुवर्णरत्नादिकं च । नदीपद्मानि यथा—"दीर्घीकुर्वन्पटुमदकलं कूजितं सारसानां
प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः ।
यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः
शिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ॥"

नदीनीलोत्पलानि—"गगनगमनलीलालम्भितान्स्वेदबिन्दून्
मृदुभिरनिलचारैः[१] खेचराणां हरन्तीम् ।
कुवलयवनकान्त्या जाह्नवीं सोऽभ्यपश्यत्
दिनपतिसुतयेव व्यक्तदत्ताङ्कपालीम् ॥"

एवं नदीकुमुदाद्यपि । सलिलमात्रे हंसा यथा—

"आसीदस्ति भविष्यतीह स जनो धन्यो धनी धार्मिकः
यः श्रीकेशववत्करिष्यति पुनः श्रीमत्कुडुङ्गेश्वरम् ।
हेलान्दोलितहंससारसकुलक्रेङ्कारसम्मूर्च्छितै-
रित्याघोषयतीव तन्नवनदी यच्चेष्टितं वीचिभिः[२] ॥"

पर्वतमात्रे सुवर्णं यथा—"नागावासश्चित्रपोताभिरामः
[३]स्वर्णस्फातिव्याप्तदिक्चक्रवालः ।
साम्यात्सख्यं जग्मिवानम्बुराशे-
रेष ख्यातस्तेन जीमूतभर्ता ॥"

रत्नानि यथा—"नीलाश्मरश्मिपटलानि महेभमुक्त-
सूत्कारशीकरविस्रंस्त्रि तटान्तरेषु ।
आलोकयन्ति सरलीकृतकण्ठनालाः
सानन्दमम्बुदधियाऽत्र मयूरनार्यः ॥"

---

१ A वा  २ AB वारि.  ३ A स्वर्णस्फीति.

एवमन्यदपि। सतोऽप्यनिबन्धनं तद्यथा—न मालती वसन्ते, न पुष्पफलं चन्दनद्रुमेषु, न फलमशोकेषु।

तत्र प्रथमः—"मालतीविमुखश्चैत्रो विकासी पुष्पसम्पदाम्।
आश्चर्यं जातिहीनस्य कथं सुमनसः प्रियाः॥"

द्वितीयः—"यद्यपि चन्दनविटपी विधिना फलकुसुमवर्जितो विहितः[1]।
निजवपुषैव परेषां तथापि सन्तापमपहरति॥"

तृतीयः—"दैवायत्ते हि फले किं क्रियतामेतदत्र तु वदामः।
नाशोकस्य किसलयैर्वृक्षान्तरपल्लवास्तुल्याः॥"

अनेकत्र प्रवृत्तवृत्तीनामेकत्राचरणं नियमः। तद्यथा—समुद्रेष्वेव मकराः, ताम्रपर्ण्यामेव मौक्तिकानि।

तयोः प्रथमः— "गोत्राग्रहारं नयतो गृहत्वं
स्वनाममुद्राङ्कितमम्बुराशिम्।
दायादवर्गेषु परिस्फुरत्सु
दंष्ट्रावलेपो मकरस्य वन्द्यः॥"

द्वितीयः—"कामं भवन्तु सरितो भुवि सप्रतिष्ठाः
स्वादूनि सन्तु सलिलानि च शुक्तयश्च।
एतां विहाय वरवर्णिनि ताम्रपर्णीं
नान्यत्र सम्भवति मौक्तिककामधेनुः॥"

असतोऽपि द्रव्यस्य निबन्धनम्। तद्यथा—मुष्टिग्राह्यत्वं सूचीभेद्यत्वं च तमसः, कुम्भापवाह्यत्वं[2] च ज्योत्स्नायाः।

तत्र प्रथमम्—"तनुलग्ना इव ककुभः भूवलयं चरणचारमात्रमिव।
दिवमिव चालिकदघ्नीं मुष्टिग्राह्यं तमः कुरुते॥"

यथा च—"पिहिते कारागारे तमसि च सूचीमुखाग्रनिर्भेद्ये।
मयि च निमीलितनयने तथापि कान्तानन्नं व्यक्तम्॥"

द्वितीयम्—"यन्त्र[3]द्रावितकेतकोदरदलस्रोतःश्रियं बिभ्रती
येयं मौक्तिकदामगुम्फनविधेर्योग्यच्छविः प्रागभूत्।

१ C जनितः. २ V कुम्भोपवाह्यत्वं. ३ V शङ्खद्रावित० C तन्त्रद्रावित० तन्त्र is explained as औषध.

[1]उत्सेच्या कलशीभिरञ्जलिपुटैर्ग्राह्या मृणालाङ्कुरैः
पातव्या च शशिन्यमुग्धविभवे सा वर्त्तते चन्द्रिका ॥"

द्रव्यस्य सतोऽनिबन्धनम् । तद्यथा—कृष्णपक्षे सत्या अपि ज्योत्स्नायाः, शुक्लपक्षे त्वन्धकारस्य । तयोः प्रथमम्—

"ददृशाते जनैस्तत्र यात्रायां सकुतूहलैः ।
बलभद्रप्रलम्बघ्नौ पक्षाविव सितासितौ ॥"

द्वितीयम्—"मासि मासि समा ज्योत्स्ना पक्षयोः शुक्लकृष्णयोः ।
तत्रैकः शुक्लतां यातो यशः पुण्यैरवाप्यते ॥"

द्रव्यनियमः । तद्यथा—मलय एव चन्दनस्थानं, हिमवानेव भूर्जोत्पत्तिस्थानम् ।

तत्र प्रथमः—"तापापहारचतुरो नागावासः सुरप्रियः ।
नान्यत्र मलयादद्रेर्दृश्यते चन्दनद्रुमः ॥"

द्वितीयः— "न्यस्ताक्षरा धातुरसेन यत्र
भूर्जत्वचः कुञ्जरबिन्दुशोणाः ।
व्रजन्ति विद्याधरसुन्दरीणा-
मनङ्गलेखक्रिययोपयोगम् ॥"

प्रकीर्णकद्रव्यकविसमयस्तु तद्यथा—क्षीरक्षारसमुद्रयोरैक्यं, सागरमहासमुद्रयोश्च ।

तयोः प्रथमः—"शेतां हरिर्भवतु रत्नमनन्तमन्त-
र्लक्ष्मीप्रसूतिरिति नो विवदामहे हे(ऽघे)[2] ।
हा दूरदूरसपयास्तृषितस्य जन्तोः
[3]किं त्वत्र(न्न) कूपपयसः स मरोर्जघन्यः ॥"

द्वितीयः—"रङ्गत्तरङ्गभ्रूभङ्गैस्तर्जयन्तीमिवापगाः ।
स ददर्श पुरो गङ्गां सप्तसागरवल्लभाम् ॥"

असतोऽपि क्रियार्थस्य निबन्धनम् । यथा—चक्रवाकमिथुनस्य निशि भिन्नतटाश्रयणं, चकोराणां चन्द्रिकापानं च ।

---

१ V उत्सेक्या. २ V ऽहो. ३ V किन्त्वस्ति सिक्त.

तत्र प्रथमः—"सङ्क्षिपता यामवतीस्तटिनीनां तनयता पयःपूरान् ।
रथचरणाह्वयवयसां किं नोपकृतं निदाघेन ॥"

द्वितीयः—"एतास्ता मलयोपकण्ठसरितामेणाक्षि रोधोभुव-
श्चापाभ्यासनिकेतनं भगवतः प्रेयो मनोजन्मनः ।
यासु श्यामनिशासु पीततमसो मुक्तामयीश्चन्द्रिकाः
पीयन्ते विवृतोर्ध्वचञ्चु विचलत्कण्ठं चकोराङ्गनाः ॥"

सतोऽपि क्रियार्थस्यानिबन्धनम् । तद्यथा—दिवा नीलोत्पलानामविकासो, निशानिमित्तश्च शेफालिकाकुसुमानाम[1]वस्रंसः ।

तत्र प्रथमः—"आलिख्य पत्त्रमसितागुरुणाभिरामं
रामामुखे क्षणसभाजितचन्द्रबिम्बे ।
जातः पुनर्विकसनावसरोऽयमस्ये-
त्युक्त्वा सखी कुवलयं श्रवणे चकार ॥"

द्वितीयः— "त्वद्विप्रयोगे किरणैस्तथोग्रै-
र्दग्धाऽस्मि कृत्स्नं दिवसं सवित्रा ।
इतीव दुःखं शशिने गदन्ती
शेफालिका रोदिति पुष्पबाष्पैः ॥"

नियमस्तु तद्यथा—ग्रीष्मादौ सम्भवतोऽपि कोकिलानां विरुतस्य वसन्त एव, मयूराणां वर्षास्वेव विरुतस्य नृत्तस्य च निबन्धः ।

तयोः प्रथमः—"वसन्ते शीतभीतेन कोकिलेन वने रुतम् ।
अन्तर्जलगताः पद्माः श्रोतुकामा इवोत्थिताः ॥"

द्वितीयः—"मण्डलीकृत्य बर्हाणि कण्ठैर्मधुरगीतिभिः ।
कलापिनः प्रनृत्यन्ति काले जीमूतमालिनि ॥"

कवीनां समयः सोऽयं जातिद्रव्यक्रियागतः ।
गु[2]णस्थोऽथ ततः स्वर्ग्यः पातालीयश्च कथ्यते ॥

इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे
जातिद्रव्यक्रियासमयस्थापना चतुर्दशोऽध्यायः ॥

---

१ A मवि. २ C गुणस्थैष.

## पञ्चदशोऽध्यायः गुणसमयस्थापना ।

असतो गुणस्य निबन्धनम् । यथा—यशोहासप्रभृतेः शौक्ल्यम्, अयशसः पापप्रभृतेश्च कार्ष्ण्यं, क्रोधानुरागप्रभृतेश्च रक्तत्वम् । तत्र यशःशौक्ल्यम्—

"स्तेमः स्तोकोऽपि नाङ्गे श्वसितमविकलं चक्षुषां सैव वृत्ति-
र्मध्येक्षीराब्धि मग्नाः स्फुटमथ च वयं कोऽयमीदृक्प्रकारः ।
इत्थं दिग्भित्तिरोधक्षतविसरतया मांसलैस्त्वद्यशोभिः
स्तोकावस्थानदुःस्थैस्त्रिजगति धवले विस्मयन्ते मृगाक्ष्यः ॥"

हासशौक्ल्यम्—"अट्टहासच्छलेनास्याद्यस्य[1] फेनौघपाण्डुराः ।
जगत्क्षय इवापीताः क्षरन्ति क्षीरसागराः ॥"

अयशःकृष्णत्वम्—

"प्रसरन्ति कीर्त्तयस्ते तव च रिपूणामकीर्त्तयो युगपत् ।
कुवलयदलसंवलिताः प्रतिदिनमिव[2] मालतीमालाः ॥"

पापकार्ष्ण्यम्—"उत्खातनिर्मलमयूखकृपाणलेखा-
श्यामायिता तनुरभूद्भयकन्धरस्य ।
सद्यःप्रकोपकृतकेशववंशनाश-
सङ्कल्पसंजनितपापमलीमसेव ॥"

क्रोधरक्तता—"आस्थानकुट्टिमतलप्रतिबिम्बितेन
कोपप्रभाप्रसरपाटलविग्रहेण ।
भौमेन मूर्च्छितरसातलकुक्षिभाजा
भूमिश्चचाल चलतोदरवर्त्तिनेव[3] ॥"

अनुरागरक्तता यथा—"गुणानुरागमिश्रेण यशसा तव सर्पता ।
दिग्वधूनां मुखे जातमकस्मादर्द्धकुङ्कुमम् ॥"

सतोऽपि गुणस्यानिबन्धनम् । कुन्दकुड्मलानां कामिदन्तानां च रक्तत्वं, कमलमुकुलप्रभृतेश्च हरितत्वं, प्रियङ्गुपुष्पाणां च पीतत्वम् ।

---

१ V स्याः पश्य. २ V प्रतिदिशमिव. ३ V चलनो.

कुन्दकुड्मलाग्ररक्तता—

"द्योतितान्तःसभैः कुन्दकुड्मलाग्रदतः स्मितैः ।
स्नपितेवाभवत्तस्य शुद्धवर्णा सरस्वती ॥"

पद्ममुकुलाद्धरितत्वम्[1]—

"उद्दण्डोदरपुण्डरीकमुकुलभ्रान्तिस्पृशा दंष्ट्रया
मग्नां लावणसैन्धवेऽम्भसि महीमुद्यच्छतो हेलया ।
तत्कालाकुलदेवदानवकुलैरुत्तालकोलाहलं
शौरेरादिवराहलीलमवतादभ्रंलिहाग्रं वपुः ॥"

प्रियङ्गुपुष्पापीतत्वम्—"प्रियङ्गुश्याममम्भोधिरन्ध्रीणां स्तनमण्डलम् ।
अलङ्कर्तुमिव स्वच्छाः सूते मौक्तिकसम्पदः ॥"

गुणनियमस्तु तद्यथा—सामान्योपादाने माणिक्यानां शोणता, पुष्पाणां शुक्लता, मेघानां कृष्णता च ।

तत्र प्रथमः—"सांयात्रिकैरविरतोपहृतानि कूटैः
श्यामासु तीरघ(व)नराजिषु सम्भृतानि ।
रत्नानि ते दधति कच्चिदिहायताक्षि
मेघोदरोदितदिनाधिपबिम्बशङ्काम् ॥"

पुष्पशुक्लता— "पुष्पं प्रवालोपहितं यदि स्या-
न्मुक्ताफलं वा स्फुटविद्रुमस्थम् ।
ततोऽनुकुर्याद्विशदस्य तस्या-
स्ताम्रौष्ठपर्यस्तरुचः स्मितस्य ॥"

मेघकार्ष्ण्यम्—"मेघश्यामेन रामेण पूतवेदिर्विमानराट् ।
मध्ये महेन्द्रनीलेन रत्नराशिरिवाबभौ ॥"

कृष्णनीलयोः, कृष्णहरितयोः, कृष्णश्यामयोः, पीतरक्तयोः, शुक्लगौरयोरेकत्वेन निबन्धनं च कविसमयः । कथम् । कृष्णनीलयोरैक्यम्—

"नदीं तूर्णं कर्णोप्यनुसृतपुलिनां दाक्षिणात्याङ्गनाभिः
समुत्तीर्णो वर्णामुभयतटच(त)लाबद्धवानीरहाराम् ।

१ C B पद्ममुकुलानां हरितत्वं. २ V दानवनुतै०.

तटे सह्यस्योच्चैः स्वसलिलनिवहो भाति नीलः स यस्याः
प्रियस्यांसे पीने लुलित इव घनः केशपाशः सुकेश्याः ॥"

कृष्णहरितयोरैक्यम्—"मरकतसदृशं च यामुनं
स्फटिकशिलाविमलं च जाह्नवम् ।
तदुभयमुदकं पुनातु वो
हरिहरयोरिव सङ्गतं वपुः ॥"

कृष्णश्यामलयोरैक्यम्—
"एतत्सुन्दरि नन्दनं शशिमणिस्निग्धालवालद्रुमं
मन्दाकिन्यभिषिक्तमौक्तिकशिले मेरोस्तटे नन्दति ।
यत्र श्यामनिशासु मुञ्चति मिलन्मन्दप्रदोषानिला-
मुद्दामामरयोषितामभिरतं कल्पद्रुमश्चन्द्रिकाम् ॥"

पीतरक्तयोरैक्यम्—
"लेखया विमलविद्रुमभासा सन्ततं तिमिरमिन्दुरुदासे ।
दंष्ट्रया कनकभङ्गपिशङ्ग्या मण्डलं भुव इवादिवराहः ॥"

शुक्लगौरयोरैक्यम्—"कैलासगौरं वृषमारुरुक्षोः
पादार्पणानुग्रहपूतपृष्ठम् ।
अवेहि मां किङ्करमष्टमूर्त्तेः
कुम्भोदरं नाम निकुम्भपुत्रम् ॥"

एवं वर्णान्तरेष्वपि । चक्षुरादेरनेकवर्णोपवर्णनम् ।

तत्र चक्षुषः शुक्लता—
"तिष्ठन्त्या जनसङ्कुलेऽपि सुदृशा सायं गृहप्राङ्गणे
तद्द्वारं मयि निःसहालसतनौ वीक्षामृदु[1] प्रेङ्खति ।
ह्रीनम्राननयैव लोलसरलं निःश्वस्य तत्रान्तरे
प्रेमार्द्राः शशिखण्डपाण्डिममुषो मुक्ताः कटाक्षच्छटाः ॥"

श्यामता—"अथ पथि गमयित्वा रम्यक्लृप्तोपकार्ये
कतिचिदवनिपालः शर्वरीः शर्वकल्पः ।
पुनर[2]विशदयोध्यां मैथिलीदर्शिनीनां
कुवलयितगवाक्षां लोचनैरङ्गनानाम् ॥"

---

१ B वीक्षां मृदुः २ V पुरमविशदयोध्या.

कृष्णता—"पादन्यासक्कणितरशनास्तत्र लीलावधूतै-
रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः ।
वेश्यास्त्वत्तो नखपदसुखान्प्राप्य वर्षाग्रबिन्दू-
नामोक्ष्यन्ते त्वयि मधुकरश्रेणिदीर्घान्कटाक्षान् ॥"

मिश्रवर्णता—"तामुत्तीर्य व्रज परिचितभ्रूलताविभ्रमाणां
पक्ष्मोत्क्षेपादुपरि विलसत्कृष्णशारप्रभाणाम् ।
कुन्दक्षेपानुगमधुकरश्रीमुषामात्मबिम्बं
पात्रीकुर्वन्दशपुरवधूनेत्रकौतूहलानाम् ॥"

इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे गुणसमयस्थापना पञ्चदशोऽध्यायः ॥

---

## षोडशोऽध्यायः स्वर्ग्यपातालीयकविरहस्यस्थापना ।

भौमवत्स्वर्ग्योऽपि कविसमयः । विशेषस्तु चन्द्रमसि शशहरिणयोरैक्यम् ।

यथा—"मा भैः शशाङ्क मम सीधुनि नास्ति राहुः
खे रोहिणी वसति कातर किं बिभेषि ।
प्रायो विदग्धवनितानवसङ्गमेषु
पुंसां मनः प्रचलतीति किमत्र चित्रम् ॥"

यथा च—"अङ्काधिरोपितमृगश्चन्द्रमा मृगलाञ्छनः ।
केसरी निष्ठुराक्षिप्तमृगयूथो[1] मृगाधिपः ॥"

कामकेतने मकरमत्स्ययोरैक्यं यथा—
"चापं पुष्पमयं गृहाण मकरः केतुः समुच्छ्रीयतां
चेतोलक्ष्यभिदश्च पञ्च विशिखाः पाणौ पुनः सन्तु ते ।
दग्धा कापि तवाकृतेः प्रतिकृतिः कामोऽसि किं गूहसे
रूपं दर्शय नात्र शङ्करभयं सर्वे वयं वैष्णवाः ॥"

यथा च—"मीनध्वजस्त्वमसि नो न च पुष्पधन्वा
केलिप्रकाश तव मन्मथता तथापि ।
इत्थं त्वया विरहितस्य मयोपलब्धाः
कान्ताजनस्य जननाथ चिरं विलापाः ॥"

---

१ B पूगो.

यथा वा—“आपातमारुतविलोडितसिन्धुनाथो
हात्कारभीतपरिवर्त्तितमत्स्यचिह्नाम् ।
उल्लङ्घ्य यादवमहोदधिभीमवेलां
द्रोणाचलं पवनसूनुरिवोद्धरामि ॥”

अत्रिनेत्रसमुद्रोत्पन्नचन्द्रयोरैक्यम्—
“वन्द्या विश्वसृजो युगादिगुरवः स्वायम्भुवाः सप्त ये
तत्रात्रिर्दिवि सन्दधे नयनजं ज्योतिः स चन्द्रोऽभवत् ।
एका यस्य शिखण्डमण्डनमणिर्देवस्य शम्भोः कला[1]
शेषाभ्योऽमृतमाप्नुवन्ति च सदा स्वाहास्वधाजीविनः ॥”

यथा च[2]—“यदिन्दोरन्वेति व्यसनमुदयं वा निधिरपा-
मुपाधिस्तत्रायं जयति जनिकर्तुः प्रकृतिता ।
अयं कस्सम्बन्धो यदनुहरते तस्य कुमुदं
विशुद्धाः शुद्धानां ध्रुवमनभिसन्धिप्रणयिनः ॥”

बहुकालजन्मनोऽपि शिवचन्द्रमसो बालत्वम् ।
“मालायमानामरसिन्धुहंसः
कोटीरवल्लीकुसुमं भवस्य ।
दाक्षायणीविभ्रमदर्पणश्रि
बालेन्दुखण्डं भवतः पुनीतात् ॥”

कामस्य[मूर्तत्वम][3]मूर्त्तत्वं च यथा—
“अयं स भुवनत्रयप्रथितसंयमः शङ्करो
बिभर्त्ति वपुषाऽधुना विरहकातरः कामिनीम् ।
अनेन किल निर्जिता वयमिति प्रियायाः करं
करेण परिताडयन् जयति जातहासः स्मरः ॥”

यथा च—“धनुर्माला मौर्वी क्वणदलिकुलं लक्ष्यमबला-
मनो भेद्यं शब्दप्रभृति य(तय) इमे पञ्च विशिखाः ।
इयान् जेतुं यस्य त्रिभुवनमनङ्गस्य विभवः
स वः कामः कामान्दिशतु दयितापाङ्गवसतिः ॥”

---

१ B कृता. २ V adds this verse after the verse वन्द्या ३ ABC मूर्तत्वं च.

द्वादशानामप्यादित्यानामैक्यम्—

“यस्याधोऽधस्तथोपर्युपरि निरवधि भ्राम्यतो विश्वमश्वै-
रावृत्तालातलीलां रचयति रयतो मण्डलं चण्डधाम्नः।
सोऽव्यादुत्तप्तकार्त्तस्वरसरलशरस्पर्द्धिभिर्धामदण्डै-
रुद्दण्डैः प्रापयन्वः प्रचुरतमतमःस्तोममस्तं समस्तम् ॥”

नारायणमाधवयोश्च यथा—

“येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यो गङ्गां च दधेऽन्धकक्षयकरो यो बर्हिपत्रप्रियः।
यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः
सो[1]ऽव्याद(?)ष्टभुजङ्गहारवलयस्त्वां सर्वदोमाधवः ॥”

एवं दामोदरशेषकूर्मादेः, कमलासम्पदोश्च। यथा—

“दोर्मन्दी(न्दे)रितमन्दरेण जलधेरुत्थापिता या स्वयं
यां भूत्वा कमठः पुराणककुदन्यस्तामुदस्तम्भयत्।
तां लक्ष्मीं पुरुषोत्तमः पुनरसौ लीलाञ्चितभ्रूलता-
निर्देशैः समवीविशत्प्रणयिनां गेहेषु दोष्णि क्षितिम् ॥”

भौमस्वर्ग्यवत्पातालीयोऽपि कविसमयः।

तत्र नागसर्पयोरैक्यम्—“हे नागराज बहुमस्य नितम्बभागं
भोगेन गाढमभिवेष्टय मन्दराद्रेः।
सोढाविषह्यवृषवाहनयोगलीला–
पर्यङ्कबन्धनविधेस्तव कोऽतिभारः ॥”

दैत्यदानवासुराणामैक्यम्। यथा—तत्र हिरण्याक्षहिरण्यकशिपुप्रह्लादविरोचनबलिबाणादयो दैत्याः, विप्रचित्तिशम्बरनमुचिपुलोमप्रभृतयो दानवाः, वलवृत्रवि[2]क्षुरस्तवृषपर्वादयोऽसुराः।

तेषामैक्यं यथा—“जयन्ति बाणासुरमौलिलालिता
दशास्यचूडामणिचक्रचुम्बिनः।
सुरासुराधीशशिखान्तशायिनो
भवच्छिदस्त्र्यम्बकपादपांसवः ॥”

---

१ C सोऽव्यादिष्ट०. २ BC विक्षुरवृषपर्वादयो.

यथा च—"तं शम्बरासुरशराशनिशल्यसारं[1]
केयूररत्नकिरणारुणबाहुदण्डम् ।
पीनांसलग्नदयिताकुचपत्रभङ्गं
मीनध्वजं जितजगत्त्रितयं जयेत्कः ॥"

यथा च—"अस्ति[2] दैत्यो हयग्रीवः सुहृद्वेश्मसु यस्य ताः ।
प्रथयन्ति बलं बाह्वोः सितच्छत्रस्मिताः श्रियः ॥"

यथा च हयग्रीवं प्रति—

"दानवाधिपते भूयो भुजोऽयं किं न नीयते ।
सहायतां कृतान्तस्य क्षयाभिप्रायसिद्धिषु ॥"

यथा च—"[3]महासुरसमाजेऽस्मिन् न चैकोऽप्यस्ति सोऽसुरः ।
यस्य नाशनिनिर्[4]पेषनीराजितमुरःस्थलम् ॥"

एवमन्येपि भेदाः—सोऽयं कवीनां समयः काव्ये सुप्त इव स्थितः ।
स साम्प्रतमिहास्माभिर्यथाबुद्धि विबोधितः ॥

इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे
स्वर्ग्यपातालीयकविरहस्यस्थापना षोडशोऽध्यायः ॥

---

## सप्तदशोऽध्यायः देशविभागः ।

देशं कालं च विभजमानः कविर्नार्थदर्शनदिशि दरिद्राति । जगज्जगदेकदेशाश्च देशाः । "द्यावापृथिव्यात्मकमेकं जगत्"इत्येके ।

तदाहुः—"हलमगु बलस्यैकोऽनड्वान्हरस्य न लाङ्गलं
क्रमपरिमिता भूमिर्विष्णोर्न गौर्न च लाङ्गलम् ।
[5]प्रवहति कृषिर्नाद्याप्येषां द्वितीयगवं विना
जगति सकले नेदृग्दृष्टं दरिद्रकुटुम्बकम् ॥"

"दिवस्पृथिव्यौ द्वे जगती" इत्यपरे ।

---

१ B V सारके. २ V आसीद्दै. ३ C महासुरसमाजेषु. ४ C निष्पोष०. ५ V प्रभवति.

तदाहुः—"रुणद्धि रोदसी वा(चा)स्य यावत्कीर्त्तिरनश्वरी ।
तावत्किलायमध्यास्ते सुकृती वैबुधं पदम् ॥"

"[1]स्वर्ग्यमर्त्यपातालभेदात्त्रीणि जगन्ति" इत्येके ।

यदाहुः—"त्वमेव देव पातालमाशानां त्वं निबन्धनम् ।
त्वं चामरमरुद्भूमिरेको [2]लोकत्रयायसे ॥"

"तान्येव भूर्भुवःस्वः" इत्यन्ये ।

तदाहुः—"नमस्त्रिभुवना[3]भोगभृतिखेदभरादिव ।
नागनाथाङ्कपर्यङ्कशायिने [4]शार्ङ्गधन्वने ॥"

"महर्जनस्तपःसत्यमित्येतैः सह सप्त" इत्यपरे ।

तदाहुः— "संस्तम्भिनी पृथुनितम्बतटैर्धरित्र्याः
संवाहिनी जलमुचां चलकेतुहस्तैः ।
हर्षस्य सप्तभुवनप्रथितोरुकीर्त्तेः
प्रासादपङ्क्तिरियमुच्छिखरा विभाति ॥"

"तानि सप्तभिर्वायुस्कन्धैः सह चतुर्दश" इति केचित् ।

तदाहुः— "निरवधि च निराश्रयं च यस्य
[5]स्थितमनुवर्त्तितकौतुकप्रपञ्चम् ।
प्रथम इह भवान्स कूर्ममूर्त्ति-
र्जयति चतुर्दशलोकवल्लिकन्दः ॥"

"तानि सप्तभिः पातालैः सहैकविंशतिः" इति केचित् ।

तदाहुः—"हरहासहरावासहरहारनिभप्रभाः ।
कीर्त्तयस्तव लिम्पन्तु भुवनान्येकविंशतिम् ॥"

"सर्वमुपपन्नम्" इति यायावरीयः । अविशेषविवक्षा यदेकयति विशेषविवक्षात्वनेकयति । तेषु भूर्लोकः पृथिवी । तत्र सप्त महाद्वीपाः ।

"जम्बूद्वीपः सर्वमध्ये ततश्च प्लक्षो नाम्ना शाल्मलोऽतः कुशोऽतः ।
क्रौञ्चः शाकः पुष्करश्चेत्यथैषां बाह्या बाह्या संस्थितिर्मण्डलीभिः ॥

---

१ V स्वर्गमृत्यु०. २ V लोकत्रयात्मकः. ३ V भोगधृति०. ४ V शार्ङ्गधन्विने. ५ V स्थितमनिवर्तित०.

लावणो रसमयः सुरोदकः सार्पिषो दधिजलः पयःपयाः ।
स्वादुवारिरुदधिश्च सप्तमस्तान्परीत्य त इमे व्यवस्थिताः ॥"

"एक एवायं लावणः समुद्रः" इत्येके ।

तदाहुः—"द्वीपान्यष्टादशात्र क्षितिरपि नवभिर्विस्तृता स्वाङ्गखण्डै-
रेकोऽम्भोधिर्दिगन्तप्रविसृ[1]तसलिलः प्राज्यमेतत्सुराज्यम् ।
कस्मिन्नप्याजिकेलिव्यतिकरविजयोपार्जिते वीरव(च)र्ये
[2]चक्रे पुञ्जेन दातुं तदिदमिति धिया वेधसे यश्चुकोप ॥"

"त्रयः" इत्यन्ये ।

तदाहुः— "आकम्पितक्षितिभृता महता निकामं
हेलाभिभूतजलधित्रितयेन यस्य ।
वीर्येण संहतिभिदा वि[3]हतोन्नतेन
कल्पान्तकालविसृतः पवनोऽनुचक्रे ॥"

यथा वा—"मातङ्गानामभावे मदमलिनमुखैः प्राप्तमाशाकरीन्द्रैः
जाते रत्नापहारे दिशि दिशि ततयो भान्ति चिन्तामणीनाम् ।
छिन्नेषूद्यानवापीतरुषु विरचिताः कल्पवृक्षा रिपूणां
यस्योदश्वत्त्रिवेलावलयफलभुजां मानसी सिद्धिरासीत् ॥"

"चत्वारः" इत्यपरे ।

तदाहुः—"चतुःसमुद्रवेलोर्मिरचितैकावलीलतम् ।
मेरुमप्यद्रिमुल्लङ्घ्य यस्य क्वापि गतं यशः ॥"

"भिन्नाभिप्रायतया सर्वमुपपन्नम्" इति यायावरीयः । सप्तसमुद्रीवादिनस्तु शास्त्रादनपेता एव ।

तदाहुः—"[4]आगस्त्यचुलुकोच्छिष्टसप्तवारिधिवारिणि ।
मुहूर्त्तं केशवेनापि [5]तदन्तः पूतरायितम् (?) ॥

"कविप्रसिद्ध्या वाऽविमृष्टपरमार्थं सर्वमुपपन्नम्[6]" (इति यायावरीयः ।)

मध्येजम्बूद्वीपमाद्यो गिरीणां
मेरुर्नाम्ना काञ्चनः शैलराजः ।
यो मूर्त्ता(योऽमर्त्या)नामौषधीनां निधानं
यश्चावासः सर्ववृन्दारकाणाम् ॥

१ V प्रसृमर०. २ V पर्याप्तं मे न दातुः ३ V विहितो०. ४ V अगस्त्यचुलकोत्क्षिप्त०.
५ V तरता पूतरायितम्. ६ V adds here this line.

तमेनमवधीकृत्य देवेना[1]म्बुजजन्मना ।
तिर्यगूर्ध्वमधस्ताच्च विश्वस्य रचना कृता ॥

स भगवान्मेरुराद्यो वर्षपर्वतः । तस्य चतुर्दिशमिलावृतं वर्षम् । तस्योत्तरेण त्रयो वर्षगिरयः, नीलः श्वेतः शृङ्गवांश्च । रम्यकं, हिरण्मयम्, उत्तराः कुरव इति च क्रमेण त्रीणि तेषां वर्षाणि । दक्षिणेनापि त्रय एव निषधो हेमकूटो हिमवांश्च । हरिवर्षं, किंपुरुषं, भारतमिति च त्रीणि वर्षाणि । तत्रेदं भारतं वर्षम्[2] । अस्य च नव भेदाः । इन्द्रद्वीपः, कसेरुमान्, ताम्रपर्णो, गभस्तिमान्, नागद्वीपः, सौम्यो, गन्धर्वो, वरुणः, कुमारीद्वीपश्चायं नवमः । पञ्चशतानि जलं, पञ्च स्थलमिति विभागेन प्रत्येकं योजनसहस्रावधयो दक्षिणात्समुद्रादद्रि[3]राजं हिमवन्तं यावत्परस्परमगम्यास्ते । तान्येतानि यो जयति स सम्राडित्युच्यते । कुमारीपुरात्प्रभृति बिन्दुसरोऽवधि योजनानां दशशती चक्रवर्तिक्षेत्रम् । तां विजयमानश्चक्रवर्ती भवति । चक्रवर्तिचिह्नानि तु—"चक्रं रथो मणिर्भार्या निधिरश्वो गजस्तथा ।
प्रोक्तानि सप्त रत्नानि सर्वेषां चक्रवर्तिनाम् ॥"

अत्र च कु[4]मारीद्वीपे—"विन्ध्यश्च पारियात्रश्च शुक्तिमानृक्षपर्वतः ।
महेन्द्रसह्यमलयाः सप्तैते कुलपर्वताः ॥"

तत्र विन्ध्यादयः प्रतीतस्वरूपाः । मलयविशेषास्तु चत्वारः । तेषु प्रथमः— "आ मूलयष्टेः फणिवेष्टितानां
सचन्दनानां जनन्दनानाम् ।
कक्कोलकैलामरिचैर्युतानां
जातीतरूणां च स जन्मभूमिः ॥"

द्वितीयः— "यस्योत्तमां मौक्तिककामधेनु-
रुपत्यकामर्चति ताम्रपर्णी ।
रत्नेश्वरो रत्नमहानिधानं
कुम्भोद्भवस्तं मलयं पुनाति ॥

१ A and V B ब्रह्मणा पुण्यकर्मणा  २ V वर्षमन्त्यमस्य च.  ३ V A and V B drop अद्रिराजं.  ४ V कुमारीद्वीपे च.

तत्र द्रुमा विद्रुमनामधेया
वंशेषु मुक्ताफलजन्म तत्र ।
मदोत्कटैः केसरिकण्ठनादैः
स्फुटन्ति तस्मिन्घनसारवृक्षाः ॥”

तृतीयः—“विलासभूमिः सकलामराणां
पदं नृणां गौर्मुनिपुङ्गवस्य ।
सदाफलैः [1]पुष्पलताप्रवालै-
राश्चर्यमूलं मलयः स तत्र ॥”

चतुर्थः—“सा तत्र चामीकररत्नचित्रैः
प्रासादमालावलभीविटङ्कैः ।
द्वारार्गलाबद्धसुरेश्वराङ्का
लङ्केति या रावणराजधानी ॥
प्रवर्त्तते कोकिलनादहेतुः
पुष्पप्रसूः पञ्चमजन्मदायी ।
तेभ्यश्चतुर्भ्योऽपि वसन्तमित्र-
मुदङ्मुखो दक्षिणमातरिश्वा ॥”

पूर्वापरयोः समुद्रयोर्हिमवद्विन्ध्ययोश्चान्तरमार्यावर्त्तः । तस्मिंश्चातुर्वर्ण्यं चातुराश्रम्यं च । तन्मूलश्च सदाचारः । तत्रत्यो व्यवहारः प्रायेण कवीनाम् ।

तत्र वाराणस्याः [2]पुरतः पूर्वदेशः । यत्राङ्गकलिङ्गकोसलतोसलोत्कलमगधमुद्गरविदेहनेपालपुण्ड्रप्राग्ज्योतिषताम्रलिप्तकमलद[3]मल्लवर्त्तकसुह्मब्रह्मोत्तरप्रभृतयो जनपदाः । बृहद्गृहलोहितगिरिचकोरदर्दुरनेपालकामरूपादयः पर्वताः । शोणलौहित्यौ नदौ । गङ्गाकरतोयाकपिशाद्याश्च नद्यः । लवलीग्रन्थिपर्णकागुरुद्राक्षाकस्तुरिकादीनामुत्पादः ।

माहिष्मत्याः परतो दक्षिणापथः । यत्र महाराष्ट्रमाहिष[4]काश्मकविदर्भ[5]कुन्तलक्रथकैशिकसूर्पारककाञ्चीकेरलकावेरमुरलवानवासकसिंहलचोड[6]दण्डकपाण्ड्यपल्लवगाङ्गनासिक्यकौङ्कणकोल्लगिरिवल्लार[7](ल)प्रभृतयो जनपदाः । विन्ध्यदक्षिणपादमहेन्द्रमलयमेकलपालम-

१ V पुष्पलतावितानैः. २ V A परतः. ३ V मलजद. ४ V माहिष्मक. ५ V वैदर्भ. ६ V चौड. ७ V वेल्लर. A वल्लर.

ञ्जरसह्यश्रीपर्वतादयः पर्वताः । नर्मदातापीपयोष्णीगोदावरीकावेरी[1]भैमरथीवेणाकृष्णवेणावञ्जुरातुङ्गभद्रा[2]ताम्रपर्ण्युत्पलावतीरावणगङ्गाद्या नद्यः । तदुत्पत्तिर्मलयोत्पत्त्या व्याख्याता ।

देवसभायाः परतः पश्चाद्देशः । तत्र देवसभसुराष्ट्रदशेरकत्रवणभृगुकच्छकच्छीयानर्त्तार्बुदब्राह्मणवाहयवनप्रभृतयो जनपदाः । गोवर्धनगिरिनगरदेवसभमाल्यशिखरार्बुदादयश्च पर्वताः । सरस्वतीश्वभ्रवतीवार्तघ्नीमहीहिडिं[3]बाद्या नद्यः । करीरपीलुगुग्गुलुखर्जूरकरभादीनामुत्पादः ।

पृथूदकात्परत उत्तरापथः । यत्र शककेकयवोक्काणहूणवाणा[4]युजकाम्बोजवाह्लीकवह्लवलिम्पाककुलूतकीरतङ्गणतुषा[5]रतुरुष्कबर्बरहरहूरवहूहुकसहुडहंसमार्गरमठकरकण्ठप्रभृतयो जनपदाः । हिमाल[6]यकलिन्देन्द्रकीलचन्द्राचलादयः पर्वताः । गङ्गासिन्धुसरस्वतीशतद्रुचन्द्रभागायमुनेरावतीवितस्ताविपाशाकुहूदेविकाद्या नद्यः । सरलदेवदारुद्राक्षाकुङ्कुमचमराजिनसौवीरस्रोतोञ्जनसैन्धववैदूर्यतुरङ्गाणामुत्पादः ।

तेषां मध्ये मध्यदेश इति कविव्यवहारः । न चायं नानुगन्ता शास्त्रार्थस्य ।

यदाहुः—"हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः ॥"

तत्र च ये देशाः पर्वताः सरितो द्रव्याणामुत्पादश्च तत्प्रसिद्धिसिद्धमिति न निर्दिष्टम् ।

द्वीपान्तराणां ये देशाः पर्वताः सरितस्तथा ।
नातिप्रयोज्याः कविभिरिति गाढं न चिन्तिताः ॥

"विनशनप्रयागयोर्गङ्गायमुनयोश्चान्तरमन्तर्वेदी(दि) । तदपेक्षया दिशो विभजेत" इत्याचार्याः । "तत्रापि महोदयं मूलमवधीकृत्य" इति यायावरीयः । "अनियतत्वाद्दिशामनिश्चितो दिग्विभागः" इत्येके । तथा हि यो वामनस्वामिनः पूर्वः स ब्रह्मशिलायाः पश्चिमः, यो गाधिपुरस्य दक्षिणः स कालप्रियस्योत्तर इति । "अवधिनिबन्धनमिदं रूपमितरत्त्वनियतमेव" इति यायावरीयः । "प्राच्यवाचीप्रतीच्युदीच्यः चतस्रो दिशः" इत्येके ।

१ V भैमरवीवेणीकृष्णवेणी. २ V ताम्रपर्णीपलावती. ३ V हिण्डिवा. ४ V वनायुजकम्बोज. ५ V तुवार. ६ V हिमालयजालन्धर.

तदाहुः—"चतसृष्वपि दिक्षु रणे द्विषतः प्रति येन चित्रचरितेन ।
विहितमपूर्वमदक्षिणमपश्चिममनुत्तरं कर्म ॥"

"ऐन्द्री, आग्नेयी, याम्या, नैर्ऋती, वारुणी, वायव्या, कौबेरी, ऐशानी चाष्टौ दिशः" इत्येके ।

तदाहुः—"एकं ज्योतिर्दृशौ द्वे त्रिजगति गदितान्यब्जजास्यैश्चतुर्भि-
र्भूतानां पञ्चमं यान्यलमृतुषु तथा षट्सु नानाविधानि ।
युष्माकं तानि सप्त त्रिदशमुनिनुतान्यष्टदिग्भाञ्जि भानो-
र्यान्ति प्राह्णे नवत्वं दश दधतु शिवं दीधितीनां शतानि ॥"

"ब्राह्मी नागीया च द्वे । ताभ्यां सह दशैताः" इत्यपरे ।

तदाहुः—"[१]दशदिक्कूटपर्यन्तसीमसङ्कटभूमिके ।
विषमा स्थूललक्ष्यस्य ब्रह्माण्डग्रामके स्थितिः ॥"

सर्वमस्तु, विवक्षापरतन्त्रा हि दिशामियत्ता । तत्र चित्रास्वात्यन्तरे प्राची, तदनुसारेण प्रतीची, ध्रुवेणोदीची, तदनुसारेणावाची, अन्तरेषु विदिशः, ऊर्ध्वं ब्राह्मी, अधस्तान्नागीयेति । द्विविधो[२] व्यवहारः कवीनां [३]प्राक्सिद्धो विशिष्टस्थानावधिसाध्यश्च । तत्र प्राक्सिद्धे प्राची—

"द्वित्रैर्व्योम्नि पुराणमौक्तिकमणिच्छायैः स्थितं तारकै-
र्ज्योत्स्नापानभरालसेन वपुषा सुप्ताश्चकोराङ्गनाः ।
यातोऽस्ताचलचूलमुद्वसमधुच्छत्रच्छविश्चन्द्रमाः
प्राची बालबिडाललोचनरुचां जाता च पात्रं ककुप् ॥"

दक्षिणा—"दक्षिणो दक्षिणामाशां यियासुः[४] सोऽधिकं बभौ ।
जिहासुर्[५]दक्षिणामाशां भगवानिव भास्करः ॥"

पश्चिमा— "पश्य पश्चिमदिगन्तलम्बिना
निर्मितं मितकथे विवस्वता ।
दीर्घया प्रतिमया सरोम्भस-
स्तापनीयमिव सेतुबन्धनम् ॥

१ V A दशदिक्कूट०. २ V द्विधा च दिव्यव्यवहारः. ३ C प्रसिद्धो. ४ V यियासन्. ५ V जिहासन्.

उत्तरा— "अस्त्युत्तरस्यां दिशि देवतात्मा
हिमालयो नाम नगाधिराजः ।
पूर्वापरौ तोयनिधी विगाह्य
स्थितः पृथिव्या इव मानदण्डः ॥"

विशिष्टस्थानावधौ तु दिग्विभागे पूर्वपश्चिमौ यथा—
"यादांसि हे चरत संगतगोत्रतन्त्रं
पूर्वेण चन्दनगिरेरुत पश्चिमेन ।
नो चेन्निरन्तरधराधरसेतुसूति-
राकल्पमेष न विरंस्यति वो वियोगः ॥

दक्षिणोत्तरौ यथा—"काञ्च्याः पुरो दक्षिणदिग्विभागे
तथोत्तरस्यां दिशि वारिराशेः ।
कर्णान्तचक्रीकृतचारु[1]चापो
रत्या समं साधु वसत्यनङ्गः ॥"

उत्तरादावप्युत्तरदिगभिधानं, अनुत्तरादावप्युत्तरदिगभिधानम् ।

तयोः प्रथमम्—"तत्रागारं धनपतिगृहानुत्तरेणास्मदीयं
दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन ।
यस्योद्याने कृतकतनयः कान्तया वर्द्धितो मे
हस्तप्राप्यः स्तबकविनतो बालमन्दारवृक्षः ॥"

द्वितीयम्—"सह्याद्रेरुत्तरे भागे यत्र गोदावरी नदी ।
पृथिव्यामिह कृत्स्नायां स प्रदेशो मनोरमः ॥"

एवं दिगन्तरेष्वपि । तत्र देशपर्वतनद्यादीनां दिशां च यः क्रमस्तं तथैव निबध्नीयात् । साधारणं तूभयत्र लोकप्रसिद्धित[2]श्च ।

तद्वद्वर्णनियमः । तत्र पौरस्त्यानां श्यामो वर्णः, दाक्षिणात्यानां कृष्णः, पाश्चात्यानां पाण्डुः, उदीच्यानां गौरः, मध्यदेश्यानां कृष्णः श्यामो गौरश्च ।

पौरस्त्यश्यामता—"श्यामेष्वङ्गेषु गौडीनां सूत्रहारैकहारिषु ।
चक्रीकृत्य धनुः पौष्पमनङ्गो वल्गु वल्गति ॥"

---

१ B पुष्प. २ B तो.

दाक्षिणात्यकृष्णता—"इदं भासां भर्तुर्द्रुतकनकगोलप्रतिकृति
क्रमान्मन्दज्योतिर्गलति नभसो बिम्बवलयम् ।
अथैष प्राचीतः[1] सरति मुरलीगण्डमलिन-
स्तरुच्छायाचक्रैः स्तबकित इव ध्वान्तविसरः ॥"

पाश्चात्यपाण्डुता—"शाखास्मेरं मधुकवलनाकेलिलोलेक्षणानां
भृङ्गस्त्रीणां बकुलमुकुलं कुन्तलीभावमेति ।
किं चेदानीं यवनतरुणीपाण्डुगण्डस्थलीभ्यः
कान्तिः स्तोकं रचयति पदं नागवल्लीच्छदेषु[2] ॥"

उदीच्यगौरता—"पुष्पैः सम्प्रति काञ्चनारतरवः प्रत्यङ्गमालिङ्गिताः
वाल्हीकीदशनव्रणारुणतरैः पत्रैरशोकोऽर्चितः ।
जातं चम्पकमप्युदीच्यललनालावण्यचौर्यक्षमं
माञ्जिष्ठैर्मुकुलैश्च पाटलतरोरन्यैव काचिल्लिपिः ॥"

यथा वा—"काश्मीरीगात्रलेखासु लोलल्लावण्यवीचिषु ।
द्रावयित्वेव विन्यस्तं स्वर्णं षोडशवर्णकम् ॥"

मध्यदेश्यकृष्णता यथा—
"युधिष्ठिरक्रोधवह्नेः कुरुवंशैकदाहिनः ।
पाञ्चालीं ददृशुः सर्वे कृष्णां धूमशिखामिव ॥"

तद्वन्मध्यदेश्यश्यामता । न च कविमार्गे श्यामकृष्णयोः पाण्डुगौरयोर्वा महान्विशेष इति कविसमयेष्ववोचाम ।

मध्यदेश्यगौरता—
"तव नवनवनीतपिण्डगौरे प्रतिफलदुत्तरकोसलेन्द्रपुत्र्याः[3] ।
अवगतमलिके मृगाङ्कबिम्बं मृगमदपत्रनिभेन लाञ्छनेन ॥"

विशेषस्तु पूर्वदेशे राजपुत्र्यादीनां गौरः पाण्डुर्वा वर्णः । एवं दक्षिणदेशेऽपि ।

तत्र प्रथमः—"कपोले जानक्याः करिकलभदन्तद्युतिमुषि
स्मरस्मेरः स्फारोड्डमरपुलकं[4] वक्त्रकमलम् ।

---

१ V प्राचीनः. २ V नागवल्लीदलेषु. ३ V कोसलेन्दुपुत्रि. B पुत्रिकायाः ४ A के.

मुहुः पश्यञ्छृण्वन्रजनिचरसेनाकलकलं
जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः ॥"

द्वितीयः—"तासां माधवपत्नीनां सर्वासां चन्द्रवर्चसाम् ।
शब्दविद्येव विद्यानां मध्ये जज्वाल रुक्मिणी ॥"

एवमन्यदपि यथासम्भवमभ्यूह्यम् ।

निगदितनयविपरीतं देशविरुद्धं वदन्ति विद्वांसः ।
तत्परिहार्यं यत्नात्तदुदाहृतयस्तु दोषेषु ॥
इत्थं देशविभागो मुद्रामात्रेण सूत्रितः सुधियाम् ।
यस्तु जिगीषत्यधिकं पश्यतु मञ्जुवनकोशमसौ ॥

इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे
देशविभागः सप्तदशोऽध्यायः ॥

---

## अष्टादशोऽध्यायः कालविभागः ।

कालः काष्ठादिभेदभिन्नः । तथा च[1]—

काष्ठा निमेषा दश पञ्च चैव त्रिंशच्च काष्ठाः कथिताः कलेति[2] ।
त्रिंशत्कलश्चैव भवेन्मुहूर्त्तस्तैस्त्रिंशता रात्र्यहनी समेते ॥

ते च चैत्राश्वयुजमासयोर्भवतः । चैत्रात्परं प्रतिमासं मौहूर्त्तिकी दिवसवृद्धिः निशाहानिश्च त्रिमास्याः; ततः परं मौहूर्त्तिकी निशावृद्धिः दिवसहानिश्च । आश्वयुजात्परतः पुनरेतदेव विपरीतम् । राशितो राश्यन्तरसङ्क्रमणमुष्णभासो मासः, वर्षादि दक्षिणायनं शिशिराद्युत्तरायणं द्व्ययनः संवत्सर इति सौरं मानम् । पञ्चदशाहोरात्रः पक्षः । वर्द्धमानसोमः[3] शुक्लो, वर्द्धमानकृष्णिमा कृष्ण इति पित्र्यं मासमानम् । अमुना च वेदोदितः कृत्स्नोऽपि क्रियाकल्पः । पित्र्यमेव व्यत्ययितपक्षं चान्द्रमसम् । इदमार्यावर्त्तवासिनः कवयश्च मानमाश्रिताः । एवं च द्वौ पक्षौ मासः । द्वौ मासावृतुः । षण्णामृतूनां परिवर्त्तः संवत्सरः । स च चैत्रादिरिति

---

१ V adds this line. २ V कला तु. ३ V सोमशुक्लिमा, वर्धमानसोमकृष्णिमा.

दैवज्ञाः, श्रवणादिरिति लोकयात्राविदः । तत्र नभा नभस्यश्च वर्षाः, इष ऊर्जश्च शरत्, सहः[1] सहस्यश्च हेमन्तः, तपस्तपस्यश्च शिशिरः, मधुर्माधवश्च वसन्तः, शुक्रः शुचिश्च ग्रीष्मः । तत्र "वर्षासु पूर्वो वायुः" इति कवयः । "पाश्चात्यः, पौरस्त्यस्तु प्रतिहन्ता" इत्याचार्याः ।

तदाहुः—"पुरोवाता हता प्रावृट् पश्चाद्वाता हता शरत्" इति ।

तदाहुः—"प्रावृष्यम्भोभृताम्भोदभरनिर्भरमम्बरम् ।
[2]कादम्बकुसुमामोदा वायवो वान्ति वारुणाः ॥"

"वस्तुवृत्तिरतन्त्रं, कविसमयः प्रमाणम्" इति यायावरीयः ।

तदाहुः—"पौरस्त्यस्तोयदर्त्तोः पवन इव पतत्पावकस्येव धूमो
विश्वस्येवादिसर्गः[3] प्रणव इव परं पावनं वेदराशेः ।
सन्ध्यानृत्तोत्सवेच्छोरिव मदनरिपोर्नन्दिनान्दीनिनादः
सौरस्याग्रे सुखं वो वितरतु विनतानन्दनः स्यन्दनस्य ॥"

शरद्यनियतदिक्को वायुर्यथा—
"उषःसु बभ्रुराकृष्टजडावश्यायशीकराः ।
शेफालीकलिकाकोशकषायामोदिनोऽनिलाः ॥"

"हेमन्ते पाश्चात्यो वायुः" इत्येके । "उदीच्य" इत्यपरे । "उभयमपि" इति यायावरीयः । तयोः पाश्चात्यः—
"भञ्जन्भूर्जद्रुमालीस्तुहिनगिरितटेषूद्गतास्त्वक्करालाः
रेवाम्भःस्थूलवीचीचयचकितचलच्चातकान् व्याधुनानः ।
पाश्चात्यो वाति वेगाद्रुततुहिनशिलाशीकरासारवर्षी
मातङ्गक्षुण्णसान्द्रस्रुतसरलतरत्सारसारी[4] समीरः ॥"

उदीच्यः—
"लम्पाकीनां किरन्तश्चिकुरविरचनां रल्लकांल्लासयन्तः
[5]चुम्बन्तश्चन्द्रभागासलिलमविकलं भूर्जकाण्डैकचण्डाः ।
एते कस्तूरिकैणप्रणयसुरभयो वल्लभा बाल्हवीनां
कौलूतीकेलिकाराः परिचयितहिमं वायवो वान्त्युदीच्याः ॥"

---

१ V. सहाः. २ V कदम्ब. ३ V B & V C विश्वस्येवादिमार्गः. ४ V A & V B सरत्सारसारी. ५ V B & V C चन्द्रभागां विचितसुमनसः कुङ्कुमान् कम्पयन्तः.

शिशिरेऽपि हेमन्तवदुदीच्यः पाश्चात्यो वा। वसन्ते दक्षिणः। तदुक्तम्—

“धुन्वं[1]ल्लङ्कावनालीर्मुहुरलकलता लासयन्केरलीना-
मन्ध्रीधम्मिल्लबन्धान्सपदि शिथिलयन्वेल्लयन्नागवल्लीः।
उद्दामं दाक्षिणात्यो म(मि)लितमलयजः सारथिर्मीनकेतोः
प्राप्तः सीमन्तिनीनां मधुसमयसुहृन्मानचौरः समीरः॥”

“अनियतदिक्को वायुर्ग्रीष्मे”इत्येके। नैर्ऋतः” इत्यपरे। “उभयमपि” इति यायावरीयः। तत्र प्रथमः—

“वात्याचक्रकचुम्बिताम्बरभुवः स्थूला रजोदण्डकाः
संग्रथ्नन्ति भविष्यदभ्रपटलस्थूणावितर्कं नभः।
किं चान्यन्मृगतृष्णिकाम्बुविसरैः पात्राणि वीतार्णसां
सिन्धूनामिह सूत्र[2]यन्ति दिवसेष्वागामिनीं सम्पदम्॥”

द्वितीयः—“सोऽयं करैस्तपति वह्निमयैरिवार्कः
साङ्गारविस्तरभरेव धरा समग्रा।
वायुः कुकूलमिव वर्षति नैर्ऋतश्च
कार्शानवैरिव शरैर्मदनश्च हन्ति॥”

किञ्च—

“गर्भा[3]न्बलाकासु निवेशयन्तो वंशाङ्कुरान्स्वैर्निनदैः सृजन्तः।
रजोऽम्बुदाः प्रावृषि मुद्रयन्तो यात्रोद्यमं भूमिभृतां हरन्ति॥
स सल्लकीसालशिलीन्ध्रयूथीप्रसूनदः पुष्पितलाङ्गलीकः।
दग्धोर्वरासुन्दरगन्धबन्धुरर्घत्ययं वारिमुचामनेहा॥
वनानि नीलीदलमेचकानि धाराम्बुधौता गिरयः स्फुरन्ति।
पूराम्भसा भिन्नतटास्तटिन्यः सान्द्रेन्द्रगोपानि च शाद्वलानि॥
चकोरहर्षी यतिचारचौरो वियोगिनीवीक्षितनाथवर्त्मा।
गृहान्प्रति प्रस्थितपान्थसार्थः कालोऽयमाध्मातनभाः पयोदैः॥
या केलियात्रा [4]करिकामिनीभिर्या तुङ्गहर्म्याग्रविलासशय्या।
चतुःसमं यन्मृगनाभिगर्भं सा वारिदर्त्तौः प्रथमातिथेयी॥

१ V धुम्वँल्लङ्का० २ V सूच. ३ V गर्भ. ४ V B & V C किल कामिनीभिः.

चलच्चटुलचातकः कृतकुरङ्गरागोदयः
सदर्दुररवोद्यमो मदभरप्रगल्भोरगः ।
शिखण्डिकुलताण्डवामुदितमद्गुकङ्काह्वयो
वियोगिषु घनागमः स्मरविषं विषं मुञ्चति ॥
दलत्कुटजकुड्मलः स्फुटितनीपपुष्पोत्करो
धवप्रसवबान्धवः प्रचितमञ्जरीकार्जुनः ।
कदम्बकलुषाम्बरः कलितकेतकीकोरक-
श्चलन्निचुलसञ्चयो हरति हन्त घर्मात्ययः ॥"

वर्षाः ॥

"द्राग[1]ग(क्त)र्जयन्ती विमदान्मयूरान्प्रगल्भयन्ती कुररद्विरेफान् ।
शरत्समभ्येति विकास्य पद्मानुन्मीलयन्ती कुमुदोत्पलानि ॥
सा भाति पुष्पाणि निवेश[2]यन्ती बन्धूकबाणासनकुङ्कुमेषु ।
शेफालिकाससपलाशकाशभाण्डीरसौगन्धिकमालतीषु ॥
सखञ्जरीटा सपयःप्रसादा सा कस्य नो मानसमाच्छिनत्ति ।
कादम्बकारण्डवचक्रवाकससारसक्रौञ्चकुलानुयाता ॥
उपानयन्ती कलहंसयूथमगस्त्यदृष्ट्या पुनती पयांसि ।
मुक्तासु शुभ्रं दधती च गर्भं शरद्विचित्रैश्चरितैश्चकास्ति ॥
क्षितिं खनन्तो वृषभाः खुराग्रै रोधो विषाणैर्द्विरदा रदन्तः ।
शृङ्गं त्यजन्तो रुरवश्च जीर्णं कुर्वन्ति लोकानवलोकनोत्कान् ॥
अत्रावदातद्युति चन्द्रिकाम्बु नीलावभासं च नभः समन्तात् ।
सु[3]रेभवीथी दिवसावतारो [4]जीर्णाभ्रखण्डानि च पाण्डुराणि ॥
महानवम्यां निखिलास्त्रपूजा नीराजना वाजिभटद्विपानाम् ।
दीपालिकायां विविधा विलासा यात्रोन्मुखैरत्र नृपैर्विधेयाः ॥
व्योम्नि तारतरतारकोत्करः स्यन्दनप्रचरणक्षमा मही ।
भास्करः शरदि दीप्रदीधितिर्बुध्यते च सह माधवः सुरैः ॥
केदार एव कलमाः परिणामनम्राः
प्राचीनमामलकमर्घति पाकनीलम् ।

१ V B प्रोन्मादयन्ती. V C प्रोन्मोदयन्ती. २ V B & V C विशेषयन्ती. ३ V सुरे-भवीथी दिवि सावतारा. ४ V B & V C जीर्णाब्जखण्डानि.

एर्वारुकं स्फुटननिर्गतगर्भगन्ध-
मम्लीभवन्ति च जरत्रपुसीफलानि ॥
गेहाजिरेषु नवशालिकणावपात-
गन्धानुभावसुभगेषु कृषीवलानाम् ।
आनन्दयन्ति मुसलोल्लसनावधूत-
पाणिस्खलद्वलयपद्धतयो वधूट्यः ॥
तीक्ष्णं रविस्तपति नीच इवाचिराढ्यः
शृङ्गं रुरुस्त्यजति मित्रमिवाकृतज्ञः ।
तोयं प्रसीदति मुनेरिव धर्मचिन्ता[1]
कामी दरिद्र इव शोषमुपैति पङ्कम्[2] ॥
नद्यो वहन्ति कुटिलक्रमयुक्तशुक्ति-
रेखाङ्कबालपुलिनोदरसुप्तकूर्माः ।
अस्यां तरङ्गितनुतोयपलायमान-
मीनानुसारिबकदत्त[3]करालफालाः ॥
अपङ्किलतटावटः शफरफाण्टफालोज्ज्वलः
पतत्कुररकातरभ्रमदद्भ्रमीनार्भकः ।
लुठत्कमठसैकतश्चलबकोटवाचाटितः
सरित्सलिलसंचयः शरदि मेदुरः सीदति ॥"

शरत् ॥

"द्वित्रिमुचुकुन्दकलिकस्त्रिचतुरमुकुलः क्रमेण लवलीषु ।
पञ्चषफलिनीकुसुमो जयति हिमर्त्तुर्नवावतरः ॥
पुन्नागरोध्रप्रसवावतंसा वामभ्रुवः कञ्चुककुञ्चिताङ्ग्यः ।
वक्रोल्लसत्कुङ्कुमसिक्थ[4]काङ्काः सुगन्धतैलाः कबरीर्वहन्ति ॥
यथा यथा पुष्यति शीतकालस्तुषारचूर्णोत्करकीर्णवातः ।
तथा तथा यौवनशालिनीनां कवोष्णतामत्र कुचा लभन्ते ॥
वराहवर्ष्मा[5]णि नवौदनानि दधीनि सन्नद्धशरा[6]णि चात्र ।
सुकोमलाः सर्षपकन्दलीश्च भुक्त्वा जनो निन्दति वैद्यविद्याम् ॥

१ V चित्तं. २ V मेघः. ३ V दन्त. ४ V सिक्थकाढ्याः. ५ B वर्ष्मा. A वघ्राणि. ६ V ०रसानि.

अत्रोपचारः सलिलैः कवोष्णैर्यत्किञ्चिदत्र स्वदतेऽन्नपानम् ।
सुदुर्भगामत्र निपीड्य शेते स्वस्त्यस्तु नित्यं तुहिनर्तवेऽस्मै ॥
विमुक्तबर्हा विमदा मयूराः प्ररूढगोधूमयवा च सीमा ।
व्याघ्रीप्रसूतिः सलिलं सबाष्पं हेमन्तलिङ्गानि जयन्त्यमूनि ॥

सशमीधान्यपाकानि क्षेत्राण्यत्र जयन्ति[1] च ।
त्रिशङ्कुतिलका रात्र्यः पच्यन्ते लवणानि च ॥

उद्यानानां मूकपुंस्कोकिलत्वं भृङ्गस्त्रीणां मौनमुद्रा मुखेषु ।
मन्दोद्योगा पत्रिणां व्योमयात्रा हेमन्ते स्यात्सर्पदर्पक्षयश्च ॥
कर्कन्धूनां नागरङ्गीफलानां पाकोद्रेकः खाण्डवो[2]प्याविरस्ति ।
कृष्णेक्षूणां पुण्ड्रकाणां च गर्भे माधुर्यश्रीर्जायते चाप्यपूर्वा ॥
येषां मध्येमन्दिरं तल्पसम्पत् पार्श्वे दाराः स्फारतारुण्यताराः ।
लीलावह्निर्निह्नुतोद्दामधूमस्ते हेमन्तं ग्रीष्मशेषं विदन्ति ॥"

इति हेमन्तः । हेमन्तधर्मः(र्मा) शिशिरः ।

विशेषस्तु—"रात्रिर्विचित्रसुरतोचितयामदैर्घ्या[3]
चण्डो मरुद्वहति कुङ्कुमपङ्कसाध्यः ।
तल्पस्थितिर्द्विगुणतूलपटा किमन्य-
दर्घन्ति चात्र विततागुरुधूपधूमाः ॥
आश्लेषिणः पृथुरतक्लमपीतशीत-
मायामिनीं घनमुदो रजनीं युवानः ।
ऊर्वोर्मुहुर्वलनबन्धनसंधिलोल-
पादान्तसंवलिततूलपटाः स्वपन्ति ॥
पानेऽम्भसोः सुरसनीरसयोर्न भाति
स्पर्शक्रियासु तुहिनानलयोर्न चात्र ।
नो दुर्भगासुभगयोः परिरम्भणे च
नो सेवने च शशिभास्करयोर्विशेषः ॥

१ V हरन्ति च. २ B षाढ. ३ V दीर्घा.

पुष्पक्रिया मरुबके जलकेलिनिन्दा
कुन्दान्यशेषकुसुमेषु धुरि स्थितानि ।
सौभाग्यमेणतिलकाङ्कजतेऽर्कबिम्बं
काले तुषारिणि दहन्ति च चन्दनानि ॥
सिद्धार्थयष्टिषु यथोत्तरहीयमान-
सन्तानभिन्नघनसूचिपरम्परासु ।
द्वित्रावशेषकुसुमासु जनिक्रमेण
पाकक्रमः कपिशिमानमुपादधाति ॥
उदीच्यचण्डानिलताडितासु
[1]सुलीनमीनासु जलस्य मूले ।
नालावशेषाब्जलतास्विदानीं
विलासवापीषु न याति दृष्टिः ॥
माद्यन्मतङ्गः पृषतैकतोषी
[2]पुष्यद्वराहो धृतिमल्लुलायः ।
दरिद्रनिन्द्यः [3]सधनैकवन्द्यः
स एष कालः शिशिरः करालः ॥
अभिनववधूरोषस्वादुः करीषतनूनपा-
दसरलजनाश्लेषक्रूरस्तुषारसमीरणः ।
गलितविभवस्याज्ञेवाद्य द्युतिर्मसृणा रवे-
र्विरहिवनितावक्त्रौपम्यं बिभर्ति निशाकरः ॥
स्त्रियः प्रकृतिपित्तलाः क्वथितकुङ्कुमालेपनै-
र्नितम्बफलकस्तनस्थलभुजोरुमूलादिभिः ।
इहाभिनवयौवनाः सकलरात्रिसंश्लेषितै-
र्हरन्ति शिशिरज्वरारतिमतीव पृथ्वीमपि ॥”

शिशिरः ॥

“चैत्रे मदर्द्धिः शुकसारिकाणां
हारीतदात्यूहमधुव्रतानाम् ।

---

१ V निलीनमीनासु. २ V B & V C पुष्यद्वराहा. ३ V C सधनैकनन्द्यः.

पुंस्कोकिलानां सहकारबन्धुः
मदस्य कालः पुनरेष एव ॥
मनोऽधिकं चात्र विलासलास्ये
प्रेङ्खासु दोलासु च सुन्दरीणाम् ।
गीते च गौरीचरितावतंसे
पूजाप्रपञ्चे च मनोभवस्य ॥
पुंस्कोकिलः कूजति पञ्चमेन
बलाद्विलासा युवतौ स्फुरन्ति ।
स्मरो वसन्तेऽत्र नवैः प्रसूनैः
स्वचापयष्टेर्घटनां करोति ॥
पिनद्धमाहारजनांशुकानां[1]
सीमन्तसिन्दूरजुषां वसन्ते ।
स्मरीकृते प्रेयसि भक्तिभाजां
विशेषवेषः स्वदते वधूनाम् ॥
अयं प्रसूनोद्धुरकर्णिकारः
पुष्पप्रपञ्चार्चितकाञ्चनारः ।
विजृम्भणाकोविदकोविदारः
कालो विकाशोद्यतसिन्दुवारः ॥
रोहीतकाम्रातककिङ्किराता
मधूकमोचाः सह माधवीभिः ।
जयन्ति शोभाञ्जनकश्च शाखी
सकेसरैः[2] पुष्पभरैर्वसन्ते ॥
यो माधवीमुकुलदृष्टिषु वेणिबन्धो
यः कोकिलाकलरुते[3] कथने च लाभः ।
पूजाविधिर्दमनकेन च यः स्मरस्य
तस्मिन्मधुः स भगवान्गुरुरङ्गनानाम् ॥

---

१ V रजतां. २ V शेखर.. ३ V रुतेः.

नालिङ्गितः कुरबकस्तिलको न दृष्टो
नो ताडितश्च चरणैः सुदृशामशोकः ।
सिक्तो न वक्रमधुना बकुलश्च चैत्रे
चित्रं तथापि भवति प्रसवावकीर्णः ॥
चैत्रे चित्रौ रक्तनीलावशोकौ
स्वर्णाशोकस्तत्तृतीयश्च पीतः ।
जैत्रं तन्त्रं तत्प्रसूनान्तरेभ्यः
चेतोयोनेः भूर्भुवःस्वस्त्रयेऽपि ॥
गूवाकानां नालिकेरद्रुमाणां[1]
हिन्तालानां पाटलीकिंशुकानाम् ।
खर्जूराणां ताडताडीतरूणां
पुष्पापीडन्यासहेतुर्वसन्तः ॥
वसन्तः ॥
विकाशकारी नवमल्लिकानां[2]
दलच्छिरीषप्रसवाभिरामः ।
पुष्पप्रदः काञ्चनकेतकीनां
ग्रीष्मोऽयमुल्लासितधातकीकः ॥
खर्जूरजम्बूपनसाम्रमोच-
प्रियालपूगीफलनालिकेरैः ।
द्वन्द्वानि खेदालसतां[3]मु(म)पास्य
रतानुसन्धानमिहाद्रियन्ते ॥
स्रोतांस्यनम्भांसि सकूपकानि
प्रपाः कठोरेऽहनि पान्थपूर्णाः ।
शुचौ समभ्यर्थि[4](र्घि)तसक्तुपाने
प्रगे च सायं च वहन्ति मार्गाः ॥
यत्कायमानेषु दिनार्द्धनिद्रा
यत्स्नानकेलिर्दिवसावसाने ।

---

१ V द्रुमाणां. २ V मालिकाना. ३ V ०मपास्य. ४ V समभ्यर्चितसक्तुधाने०.

यद्रात्रिशेषे सुरतावतारः
स मुष्टियोगो घनघर्ममाथी ॥
या चन्द्रिका चन्दनपङ्कहृद्या
या जालमार्गानिलवीचिमाला।
या तालवृन्तैरुदबिन्दुवृष्टि-
र्जलाञ्जलिं सा शुचये ददाति ॥
कर्पूरचूर्णं[1] सहकारभङ्ग-
स्ताम्बूलमार्द्रक्रमुकोपक्लृप्तम्।
हाराश्च तारास्तनुवस्त्रमेत-
न्महारहस्यं शिशिरक्रियायाः ॥
मुक्तालताश्चन्दनपङ्कदिग्धा
मृणालहारानुसृता जलार्द्राः।
स्रजश्च मौलौ स्मि(सि)तचम्पकानां
ग्रीष्मेऽपि सोऽयं शिशिरावतारः ॥"

अत्र हि—"पच्यन्त इव भूतानि ताप्यन्त इव पांसवः।
क्वथ्यन्त इव तोयानि ध्मायन्त इव चाद्रयः ॥
ऐणाः[2] स्थलीषु मृगतृष्णिकया ह्रियन्ते
स्रोतस्तनुत्वजनिता जलवेणिबन्धाः।
ताम्यत्तिमीनि च सरांसि जलस्य शोषा-
दुच्चारघट्टघटिकावलयाश्च[3] कूपाः ॥
करभाः शरभाः सरासभा
मदमायान्ति भजन्ति विक्रियाम्।
करवीरकरीरपुष्पिणीः
स्थलभूमीरधिरुह्य चासते ॥
सहकाररसार्चिता रसाला
जलभक्तं फलपानकानि मन्थाः।

१ V चूर्णः. २ V एण्यः. ३ A ०द्बद्धारघट्ट०.

मृगलावरसाः शृतं च दुग्धं
स्मरसञ्जीवनमौषधं निदाघे ॥

जडचन्दनचारवस्तरुण्यः
सजलार्द्राः सहतारहारमालाः ।
कदलीदलतल्पकल्पनस्थाः
स्मरमाहूय निवेशयन्ति पार्श्वे ॥

ग्रीष्मे चीरीनादवन्तो वनान्ताः
पङ्काभ्यक्ताः सैरिभाः सेभकोलाः ।
लोलजिह्वाः सर्पसारङ्गवर्गा[1]
मूलस्रस्तैः पत्रिणश्चांसदेशैः ॥

हर्म्यं रम्यं चन्द्रिकाधौतपृष्ठं
कान्तोच्छिष्टा वारुणी वारिमिश्रा ।
मालाः कण्ठे पाटलामल्लिकानां
सद्यो ग्रीष्मं हन्त हेमन्तयन्ति ॥

ग्रीष्मः ॥

चतुरवस्थश्च ऋतुरुपनिबन्धनीयः। तद्यथा—सन्धिः, शैशवं, प्रौढिः, अनुवृत्तिश्च। ऋतुद्वयमध्यं सन्धिः। शिशिरवसन्तसन्धिर्यथा—

"च्युतसुमनसः कुन्दाः पुष्पोद्गमेष्वलसा द्रुमा
मनसि च गिरं गृह्णन्तीमे गिरन्ति[2] न कोकिलाः ।
अथ च सवितुः शीतोल्लासं लुनन्ति मरीचयो
न च जरठतामालम्बन्ते क्लमोदयदायिनीम् ॥"

वसन्तशैशवम्—

"गर्भग्रन्थिषु वीरुधां सुमनसो मध्येऽङ्कुरं पल्लवा
वाञ्छामात्रपरिग्रहः पिकवधूकण्ठोदरे पञ्चमः ।
किं च त्रीणि जगन्ति जिष्णु दिवसैर्द्वित्रैर्मनोजन्मनो
देवस्यापि चिरोज्झितं यदि भवेदभ्यासवश्यं धनुः ॥"

१ V सर्वसारङ्ग०. २ V किरन्ति

वसन्तप्रौढिः—

"साम्यं सम्प्रति सेवते विचकिलं षाण्मासिकैर्मौक्तिकैः
कान्तिं कर्षति काञ्चनारकुसुमं माञ्जिष्ठधौतात्पटात् ।
हूणीनां कुरुते मधूकमुकुलं लावण्यलुण्टाकतां
लाटीनाभिनिभं चकास्ति च पतद्वृन्ताग्रतः केसरम् ॥"

अतिक्रान्तर्तुलिङ्गं यत्कुसुमाद्यनुवर्त्तते ।
लिङ्गानुवृत्तिं तामाहुः सा ज्ञेया काव्यलोकतः ॥

वर्षासु ग्रीष्मलिङ्गाब्जविकासानुवृत्तिः ।

यथा—"खं वस्ते कलविङ्ककण्ठमलिनं कादम्बिनीकम्बलं
चर्चां पारयतीव दर्दुरकुलं कोलाहलैरुन्मदम् ।
गन्धं मुञ्चति सिक्तलाजसदृशं वर्षेण दग्धा स्थली
दुर्लक्ष्योऽपि विभाव्यते कमलिनीहासेन भासां पतिः ॥"

एवमन्येऽपि ।

किञ्च—ग्रैष्मिकसमयविकासी कथितो धूलीकदम्ब इति लोके ।
जलधरसमयप्राप्तौ स एव धाराकदम्बः स्यात् ॥

यथा— "धूलीकदम्बपरिधूसरदिङ्मुखस्य
रक्तच्छटासुरशरासनमण्डनस्य ।
दीप्तायुधाशनिमुचो ननु नीलकण्ठ
नोत्कण्ठसे समरवारिधरागमस्य ॥"

जलसमयजायमानां जातिं यां कार्दमीति[1] निगदन्ति ।
सा शरदि महोत्सविनी गन्धान्वितषट्पदा भवति ॥

यथा—"स्थूलावश्यायबिन्दुद्यु(द्रु)तिदलितबृहत्कोरकग्रन्थिभाजो
जात्या जालं लतानां जरठपरिमलप्लावितानां जजृम्भे ।
नानाहंसोपधानं सपदि जलनिधेश्चोत्ससर्पापरस्य
ज्योत्स्नांशुक्लोपधानं[2] शयनमिव शशी नागभोगाङ्कमम्भः ॥

स्तोकानुवृत्तिं केतक्या अपि केचिदिच्छन्ति ।

---

१ V कर्दमेन जनयन्ति. २ CB ०मुक्तोपधानं.

यथा— "असूच्यत शरत्कालः केतकीधूलिधूसरैः ।
पद्मातान्नैर्नवायातश्चरणैरिव वासरैः ॥"

शरद्भवानामनुवृत्तिरत्र
बाणासनानां सकुरुण्टकानाम् ।
हेमन्तवक्रे यदि दृश्यतेऽपि
न दृश्यते बन्धविधिः कवीनाम् ॥

हेमन्तशिशिरयोरैक्ये सर्वलिङ्गानुवृत्तिरेव । उक्तञ्च—"द्वादशमासः संवत्सरः, पञ्चर्तवो हेमन्तशिशिरयोः समासेन" [इति]।

मरुबकदमनकपुन्नागपुष्पलिङ्गानुवृत्तिभिः सुरभिः ।
रचनीयश्चित्रश्रीः किञ्चित्कुन्दानुवृत्त्या च ॥

यथा[1]—"गेहे वाहीकयूनां वहति दमनको मञ्जरीकर्णपूरा-
नुन्मादः पामरीणां मरुति मरुबकामोदिनि व्यक्तिमेति ।
सद्योभङ्गानुसारस्रुतसुरभिसिराशीकरः साहकारः
सर्पन्नम्भःशरावे रचयति च रसो रेचकीचन्द्र[2]काणि ॥"

यथा वा[3]—"कुन्दे मन्दस्तमाले मुकुलिनि विकलः कातरः किङ्किराते
रक्ताशोके सशोकश्चिरमतिविकचे चम्पके कुञ्चिताक्षः ।
पान्थः खेदालसोऽपि श्रवणकटुरटच्चक्रमभ्येति धुन्वन्
सोत्कण्ठः षट्पदानां नवमधुपटलीलम्पटं कर्पटेन ॥"

यथा वा—"धुनानः कावेरीपरिसरभुवश्चन्दनतरून्
मरुन्मन्दः कुन्दप्रकरमकरन्दानवकिरन् ।
प्रियक्रीडाकर्षच्युतकुसुममामूलसरलं
ललाटे लाटीनां लुठितमलकं ताण्डवयति ॥"

एवमन्याऽप्यनुवृत्तिः ।

विचकिलकेसरपाटलिचम्पकपुष्पानुवृत्तयो ग्रीष्मे ।
तत्र च तुहिनर्तुभवं मरुबकमपि केचिदिच्छन्ति ॥

---

१ V adds this before गेहे. २ V चक्र. ३ V adds this here.

यथा—"कर्णे स्मेरं शिरीषं शिरसि विचकिलस्रग्लताः पाटलिन्यः
कण्ठे माणालहारो वलयितमसिताम्भोजनालं कलाच्योः ।
सामोदं चन्दनाम्भः स्तनभुवि नयने म्लानमाञ्जिष्ठपृष्ठे
गात्रं लोलज्जलार्द्रं जयति मृगदृशां ग्रैष्मिको वेष एषः ॥"

यथा च—"अभिनवकुशसूचिस्पर्द्धि कर्णे शिरीषं
मरुबकपरिवारं पाटलादाम कण्ठे ।
स तु सरसजलार्द्रोन्मीलितः सुन्दरीणां
दिनपरिणतिजन्मा कोऽपि वेषश्चकास्ति ॥"

एवमुदाहरणान्तराणि ।

ऋतुभववृत्त्यनुवृत्ती दिङ्मात्रेणात्र सूचिते सन्तः ।
शेषं स्वधिया पश्यत नामग्राहं कियद्ब्रूमः ॥
देशेषु पदार्थानां व्यत्यासो दृश्यते स्वरूपस्य ।
तन्न तथा बध्नीयात्कविबद्धमिह प्रमाणं नः ॥
शोभान्धोगन्धरसैः फलार्चनाभ्यां च पुष्पमुपयोगि ।
षोढा दर्शितमेतत्स्यात्सप्तममनुपयोगि [तथा] ॥

यथा— यत्प्राचि मासे कुसुमं निबद्धं
तदुत्तरे बालफलं विधेयम् ।
तदग्रिमे प्रौढिधरं च कार्यं
तदग्रिमे पाकपरिष्कृतं च ॥
द्रुमोद्भवानां विधिरेष दृष्टो
वल्लीफलानां न महाननेहा ।
तेषां द्विमासावधिरेव कार्यः
पुष्पे फले पाकविधौ च कालः ॥

अन्तर्व्याजं बहिर्व्याजं बाह्यान्तर्व्याजमेव च ।
सर्वव्याजं बहुव्याजं निर्व्याजं च तथा फलम् ॥

---

१ BC म्लान० २ AC चि. ३ V B & V C शोभास्रग् V A शोभाश्र० ४ V तत्सप्तममनुपयोगि तथा.

लकुचाद्यन्तर्व्याजं तथा बहिर्व्याजमत्र मोचादि ।
आम्राद्युभयव्याजं सर्वव्याजं च ककुभादि ॥
पनसादि बहुव्याजं नीलकपित्थादि[१] भवति निर्व्याजम् ।
सकलफलानां षोढा ज्ञातव्यः कविभिरिति भेदः ॥
एकद्वित्र्यादिभेदेन सामस्त्येनाथवा ऋतून् ।
प्रबन्धेषु निबध्नीयात्क्रमेण व्युत्क्रमेण वा ॥
न च व्युत्क्रमदोषोऽस्ति कवेरर्थपथस्पृशः ।
तथा कथा कापि भवेद् व्युत्क्रमो भूषणं यथा ॥
अनुसन्धानशून्यस्य भूषणं दूषणायते ।
सावधानस्य च कवेर्दूषणं भूषणायते ॥
इति कालविभागस्य दर्शिता वृत्तिरीदृशी ।
कवेरिह महान्मोह इह सिद्धो महाकविः ॥

इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे
कालविभागो नाम अष्टादशोऽध्यायः ॥

समाप्तमिदं प्रथममधिकरणं कविरहस्यं काव्यमीमांसायाम् ॥

---

१ V कपिच्छादि.

# EXPLANATORY NOTES.

**Notes enclosed within square brackets [ ] belong to preveious Editions.**

---

## Page I

* [ l. 1. अथात काव्यं मीमांसिष्यामहे. Hemacandra has named his work on Nyāya as प्रमाणमीमांसा The first sūtra of his work is "अथ प्रमाणमीमासा". For the propriety of the words अथ and मीमांसा *cf.* Hemacandra's vṛtti on the same.

"अथेत्यस्याधिकारार्थत्वाच्छास्त्रेणाधिक्रियमाणस्य प्रस्तूयमानस्य प्रमाणस्याभिधानात्सकलशास्त्रतात्पर्यव्याख्यानेन प्रेक्षावन्तो बोधिता प्रवर्तिताश्च भवन्ति । आनन्तर्यार्थो वाऽथशब्द । शब्दकाव्यच्छन्दोनुशासनेभ्योऽनन्तरं प्रमाणं मीमांस्यत इत्यर्थ । अनेन शब्दानुशासनादिभिरस्यैककर्तृकत्वमाह । अधिकारार्थस्य चाथशब्दस्यान्यार्थनीयमानकुसुमदामजलकुम्भादेर्दर्शनमिव श्रवणं मङ्गलायापि कल्पत इति । मङ्गले च सति परिपन्थिविघ्नविघातादक्षेपेण शास्त्रसिद्धिरायुष्मच्छ्रोतृकता च भवति । परमेष्ठिनमस्कारादिकं तु मङ्गलं कृतमपि न निवेशितं लाघवार्थिना शास्त्रकारेणेति ।

प्रकर्षेण संशयादिव्यवच्छेदेन मीयते परिच्छिद्यते वस्तुतत्वं येन तत्प्रमाणम् । प्रमायां साधकतमम् । तस्य मीमांसोद्देशादिरूपेण पर्यालोचनम् । त्रयी हि शास्त्रस्य प्रवृत्तिरुद्देशो लक्षणं परीक्षा च । तत्र नामधेयमात्रकीर्तनमुद्देशः यथेदमेव सूत्रम् । उद्दिष्टस्यासाधारणधर्मवचनं लक्षणम् । तद्वेधा सामान्यलक्षणं विशेषलक्षणं च । सामान्यलक्षणमनन्तरमेव सूत्रम् । विशेषलक्षणं विशद प्रत्यक्षमिति । विभागस्तु विशेषलक्षणस्यैवाङ्गमिति न पृथगुच्यते । लक्षितस्येदमित्थं भवति नेत्थमिति न्यायत परीक्षणं परीक्षा यथा तृतीयसूत्रम् । पूजितविचारवचनश्च मीमासाशब्दस्तेन न प्रमाणमात्रस्यैव विचारोऽत्राधिकृत· । किन्तु तदेकदेशभूतानां दुर्नयनिराकरणद्वारेण परिशोधितमार्गाणा नयानामपि । "प्रमाणनयैरधिगम" इति हि वाचकमुख्य· । सकलपुरुषार्थेषु मूर्धाभिषिक्तस्य सोपायस्य सप्रतिपक्षस्य मोक्षस्य च । एवं हि पूजितो विचारो भवति । प्रमाणमात्रविचारस्तु प्रतिपक्षनिराकरणपर्यवसायी वाक्कलहमात्रं स्यात् । तद्विवक्षाया तु अथ प्रमाणपरीक्षेत्येव क्रियेत । तत् स्थितमेतत् प्रमाणनयपरिशोधितप्रमेयमार्गं सोपायं सप्रतिपक्षमोक्षं विवक्षितुं मीमासाग्रहणमकार्याचार्येणेति ॥ १ ॥" For अथातः *cf.* also "अथातो ब्रह्मजिज्ञासा" ब्र. सू. 1-1-1 and the Bhāsya. ]

l. 1. अथात । Generally original writers in the sūtra style begin their treatises with the words either अथातः or अथ. Āpastamba, Kaṇāda, Jaimini and Bādarāyana in their respective sūtra works use the words अथात in the beginning, while Patañjali begins with अथ in his works on Yoga and Grammar. Eminent Bhāsyakāras such as S'abarasvāmin, S'ankarācārya and Patañjali interpret the word अथ generally in two senses, i. e. आनन्तर्य and अधिकार. आनन्तर्य is meant when अथ is followed by the word अत· and in all other cases अधिकार. Others believe that the words अथातः joined together in the beginning of a work, mean nothing but आनन्तर्य. This view, held

by Bhavadāsa and other Vṛttikāras on Jaimini earlier than S'abara (cir. 500 A. D ), has been cited and refuted in the S'lokavārttika by Kumārila (*see* Kārikās 1. 33, 34, 63)

Prabhākarabhatta also, while commenting on S'abarasvāmin introduces this view of Bhavadāsa and refutes it in his work entitled the Bṛhatī, saying. 'लोके' इत्यादिभाष्यस्याथातः शब्दस्यालौकिकार्थाशङ्कानिवृत्तिः प्रयोजनम् । (1. 1. 1.)

Some Vṛttikāras, such as Rudradatta and others while commenting on the first sūtra अथातो दर्शपूर्णमासौ व्याख्यास्यामः of the Āpastambaśrauta, take the two words अथातः to mean only आनन्तर्य following Bhavadāsa. S'abarasvāmin, however, refutes this view of Bhavadāsa with care and establishes the meanings of आनन्तर्य for अथ and हेतुभाव for the word अतः in the sūtra अथातो धर्मजिज्ञासा of Jaimini Other commentators such as Dhūrtasvāmin, S'aṅkaramiśra and others, in their works on Āpastamba and Kaṇāda, take the word अथ to indicate 'Mangala'. But S'ankarācārya in his Bhāsya on Bādarāyana sūtra disapproves of this and takes अथ to mean only आनन्तर्य, saying अर्थान्तरप्रयुक्त एव ह्यथशब्दः श्रुत्या मङ्गलप्रयोजनो भवति । For other meanings of the word अथ reference may be made to the verses —

मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ । (Amarakośa 3. 246.)

and ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥

Rājaśekhara also begins his work with the words अथातः and this shows that he intends to write his Kāvyamīmāmsā in the sūtra style. Here अथ cannot mean अधिकार because of the finite verb मीमांसिष्यामहे, as also because it is followed by the word अतः. आनन्तर्य alone, therefore, is better fitted here than अधिकार and हेतुभाव for the word अतः । आनन्तर्य obviously connects two events and, therefore, requires a previous event after which the Kāvyamīmāmsā may be composed by him. What then is that event after which Rājaśekhara composed the Kāvyamīmāmsā? The previous event or circumstance in this case can only be suggested as the author himself did not mention it. Many circumstances such as शिष्यप्रश्न, देवताराधन, रसायनादिक्रिया, गुरुपर्वक्रम, etc. are suggested by the commentators of the sūtras of Kanāda, Āpastamba and others after which, they thought the work was composed by their respective authors.

It may be suggested here that गुरुपर्वक्रम is to be taken as the previous event required by the word अथ, as Rājaśekhara himself enumerates the teachers of the Kāvyamīmāmsā in the sentence beginning with यथोपदिदेश श्रीकण्ठ, etc. In this case, therefore, the word अथ suggests that Rājaśekhara composed the Kāvyamīmāmsā after having been taught by his own Guru who was the last in the list of teachers beginning with S'rīkantha. This is what is called गुरुपर्वक्रम.

A suggestion of this kind is also made by Kumārilabhatta while explaining the word अथ in the sūtra अथातो धर्मजिज्ञासा of Jaimini, and subsequently, the same is rejected by him on the ground that the knowledge of this गुरुपर्वक्रम does not help the reader in any way, and that the list of teachers also cannot be taken as entirely accurate. In this connection Pārthasārathi's commentary on Kumārila is noteworthy :—

"पर्व अवच्छेद. । गुरुपर्वणां क्रम गुरुपर्वक्रम । तद्यथा 'ब्रह्मा प्रजापतये मीमासां प्रोवाच । सोऽपीन्द्राय । सोऽप्यादित्याय । स च वसिष्ठाय । सोऽपि पराशराय । पराशर कृष्णद्वैपायनाय । सोऽपि जैमिनये । स च स्वोपदेशानन्तरमिमं न्यायं ग्रन्थे निबद्धवान्' इति । सोऽयमेवंविध· सबन्धो निष्फलो निर्हेतुकश्च । नह्यस्मिन् सबन्धे किञ्चित्प्रमाणमस्ति' । इति । (Nyāyaratnākara, p. 8)

It is necessary, therefore, to find out a reasonable circumstance which may have preceded the composition of the Kāvyamīmāmsā. That circumstance seems to be the composition of other earlier Kāvyas. Here the word अथ seems to indicate that after composing the Kāvyas and Nātakas, the author begins composing the Kāvyamīmāmsā. It is easy now to understand the meaning of the word अत. This word indicates वृत्तस्य हेतुभाव. Here वृत्त is काव्यनाटककरण This is the exact event that precedes the composition of the Kāvyamīmāmsā To explain the necessities of a poet and the method of composition which are treated of in the Kāvyamīmāmsā, a writer should first gain experience as a poet and compose several works on different subjects. The words अथ and अत, therefore, indicate as follows —

अथ=बालरामायणहरविलासादिदृश्यश्रव्यकाव्यकरणानन्तरम् ।

अत =काव्यविचारात्मकमीमासाशास्त्रस्य काव्यकरणानन्तरमेव सुकरत्वाद्धेतो ।

The word अत can, however, be explained from a different standpoint. This word being derived from a सर्वनाम, is used here to mean the desired object (बुद्धिस्थपरामर्शी) In that case अत. means श्रीकण्ठमारभ्य प्रवृत्तस्य काव्यमीमासाशास्त्रस्योच्छिन्नत्वाद्धेतो । Therefore, the construc-

